महिमा विभूतिरित्यर्थः। अयं भावः—यथा सगुणे स्थितं निर्गुणं स्वरूपमुपासको न प्राप्नोति तदुपासकत्वाभावात्तथा तद्गतं जगत्स्रष्टृत्वादिकमप्यैश्वर्यं न प्राप्नोति *तदुपास्त्यभावादुपास्त्यभावश्च श्रुत्यभावादिति ॥ १९ ॥

अत्र दृष्टान्तार्थं निर्गुणं स्वरूपमुक्तं तत्र प्रमाणान्तरमाह—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृती दर्शयतः। 'न तत्र सूर्यो भाति न चन्द्रतारकम्' [क० ५। १५] इत्याद्या श्रुतिः 'न तद्भासयते सूर्यः' [भ० गी० ५। ६] इत्याद्या स्मृतिरिति ॥ २० ॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

उपासकस्योपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतं न जगद्व्यापारेण 'तमाहाऽऽपो वै खलु मीयन्ते लोकोऽसौ' इति। तस्माल्लिङ्गाद्विदुषः सातिशयमैश्वर्यं गम्यत इत्यर्थः। तं ब्रह्मलोकस्थमुपासकं हिरण्यगर्भ आह आपो वै खल्वमृतमय्यो मया मीयन्ते भुज्यन्ते तवाप्यसावमृतोदकलक्षणो लोको भोग्य इत्यर्थः ॥ २१ ॥

ननु यदीश्वरैश्वर्येणातिशयेन सहितं विदुष ऐश्वर्यं सातिशयं तर्हि लौकिकैश्वर्यवदनित्यं स्यात्तथा च विदुषोऽप्यावृत्तिः प्रसज्येतेत्याशङ्क्य दयासिन्धुर्भगवान्बादरायणः समाधत्ते—

---

गोचरं सवितृमण्डलाद्यधिष्ठानम्। तथा हि द्विरूपा हि यस्मात्स्थितिमाहाऽऽम्नायः—एतावानस्य महिमेत्यादिना ॥ १९ ॥

नन्वत्र पादद्वयमुपलभ्यते न त्वस्य प्रमाणं किंचिदित्यत आह—दर्शयत इति। एवं विकारावर्ति रूपं श्रुतिस्मृती दर्शयतः। श्रुतिर्न तत्र सूर्य इत्याद्या। स्मृतिर्न जायत इत्याद्या। चकारो मुक्तेरपि सत्त्वमाह ॥ २० ॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—भोगेति। अनादिसिद्धेन परमेश्वरेण भोगमात्रं समानं योगिनां यथैतां देवतामित्यादिना। तदेव लिङ्गं जगद्व्यापाराभावे। चकारादनेकेश्वरादिदोषश्च ॥ २१ ॥

---

* घ. भूतोत्पादनसमये योगिनामीश्वरसंनिधानाभावादित्यर्थः।

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तास्तेषामनावृत्तिरेव तेषां न पुनरावृत्तिरित्यादिक्रममुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदामावृत्तिशङ्कैव नास्ति यतः सगुणविदामपि निर्गुणाश्रयणेनैवानावृत्तिर्नान्यथा । तस्माद्ब्रह्मविदां निरस्तानर्थव्रातस्वप्रभानिरतिशयानन्दब्रह्मात्मनाऽवस्थितिरिति सिद्धम् । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥ २२ ॥

य: सर्वश्रुतिबन्दिवन्दिततनुर्मायात्मनिद्रान्तग:
सुप्तोऽस्मिन्भवपत्तने परिमिते कल्पान्तकल्पान्तरे ।
य: सर्वोपरिपन्थिसाञ्जनघनप्रज्ञाप्रवाहान्तज-
प्रज्ञालभ्यसुखाकृति: कृतिमिमां राम: स गृह्णातु न: ॥ १ ॥
अस्मिन्पद्येऽध्यायचतुष्टयार्थः सूचितः ।
विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ।
व्यासवाङ्मणिसंदृब्धा प्रीतये तेऽस्तु सर्वदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणाशिक्षितश्रीरामकिंकरधर्मकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ॥

---

ननु एवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिरिति चेत्—अनावृत्तिरिति । नाऽऽवृत्तिश्च शब्दात् । सूत्राभ्यासः शास्त्रसमाप्तिं द्योतयति ॥ २२ ॥

सूत्राणि सूक्ष्माणि हि चर्मनेत्रै-
र्बोद्धुं न शक्यानि सुवर्णसंघात् ।
तेषां प्रबोधाय सुवर्णजालं
निःसारितं भूरि विधाय दीपम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य
श्रीमच्छंकरानन्दभगवतः कृतौ ब्रह्मसूत्रदीपिकायां
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

१ क. 'निश्च पतः सु' । २ क. 'न्तराला' ।

## श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राणां वर्णानुक्रमपत्रकम् ।

इ.



ई.

द.

## श.

स.

| ग्रन्थनाम । | मूल्यम् | |
|---|---|---|
| | रू० | आ० |
| ९१ गौतमप्रणीतन्यायसूत्राणि-भाष्यवृत्तिभ्यां समेतानि। ... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्-सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— „ „ | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् । ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता । धर्मशास्त्रग्रन्थः । | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् । | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्राः । ... ... ... | २ | ० |
| १०७ लीलावती-श्रीमद्भास्कराचार्यप्रणीता । टीकाद्वयोपेता द्विभागा । | ३ | ० |
| १०८ व्या०महाभाष्यम्—(अङ्गा.)। पतञ्जलिवि.म.उ.यु.द्विभागम् । | ४ | ४ |
| १०९ श्रीमद्भगवद्गीताप्रथमाध्यायौ—म.अभ्यंकरटीकायुतौ । | २ | ३ |
| ११० ग्रहगणिताध्यायः—(पूर्वार्धः)भास्क०कृतः। भाष्यटीकोपेतः । | २ | ८ |
| १११ कायपरिशुद्धिः—म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीता । | १ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । ... | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीत निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । .. | १ | ० |

